ओ३म्

# अथर्ववेदीय चिकित्सा-सूक्तानि समीक्षात्मकमध्ययनम्

संस्कृत विभागे, गुरुकुलकांगड़ीविश्वविद्यालयस्य
पी-एच० डी० उपाध्यर्थ प्रस्तुतः शोध प्रबन्धस्य सारः





शोधकर्त्री:
श्रीमती मीनाक्षी:

निर्देशिका:
डॉ० सूनृता विद्यालंकार:
प्राचार्या–कन्या गुरुकुल महाविद्यालयस्य:
हरिद्वारम्

विभागाध्यक्ष:
प्रो० वेद प्रकाश शास्त्री

अध्यक्ष: प्राच्यविद्यासंकायस्य
प्रो० भारतभूषण विद्यालंकार





संस्कृत - विभाग
गुरुकुलकांगड़ीविश्वविद्यालयस्य:, हरिद्वारम्
2002

ओ३म्

# अथर्ववेदीय चिकित्सा-सूक्तानि समीक्षात्मकमध्ययनम्

संस्कृत विभागे, गुरुकुलकांगड़ीविश्वविद्यालयस्य
पी-एच० डी० उपाध्यर्थ प्रस्तुतः शोध प्रबन्धस्य सारः





शोधकर्त्री: Meenakshi
श्रीमती मीनाक्षी:

27/12/02

निर्देशिका:
डॉ० सूनृता विद्यालंकार:
प्राचार्या–कन्या गुरुकुल महाविद्यालयस्यः
हरिद्वारम्
प्राचार्या
कन्या गुरुकुल महाविद्यालय (अन्तर्गत)
गुरुकुल काँगड़ी विश्वविद्यालय, हरिद्वार

विभागाध्यक्षः
प्रो० वेद प्रकाश शास्त्री

अध्यक्षः प्राच्यविद्यासंकायस्य
प्रो० भारतभूषण विद्यालंकार

संस्कृत - विभाग
गुरुकुलकांगड़ीविश्वविद्यालयस्यः, हरिद्वारम्

2002

# शोधसारः

अस्य शोध प्रबन्धस्य **प्रथमोध्याये** वैदिकसाहित्यरूपे चतुर्णां वेदानां सामान्य परिचय प्रस्तुतमस्ति। वेदानां महत्वं नैव केवलं भारतीय मनिषीभिरपितु वैदेशिकैः विद्वदिभरपि स्वीकृतोऽस्ति। एते मानवजातीनां प्राचीनतमं साहित्यं प्रस्तुतं कुर्वन्ति चेदे कोऽपि शब्दः वा वाक्यमनथर्कोनास्ति प्रत्येक शब्दः स्वान्ते कञ्चन विशिष्टं रहस्यं समायोजयति। भारतीय संस्कृतेः गौरवमयगरिमा वेदेष्वाश्रिताऽस्ति।

वेदानां रचनानन्तरं ब्राह्मणग्रन्थानां रचनाऽभवत् तदनन्तरमारण्यक ग्रन्थानां रचनाऽभवत् यस्मिन अरण्ये वसन् ब्रह्मविद्यादीनां विधानं वर्णितोस्ति। तदनन्तर उपनिषद एषु जीवन शैल्यां सरलरीत्या प्रस्तुतमस्ति। वेदान् स्मर्तु निरूक्त, व्याकरणादि वेदांगानां रचनाकृता प्राचीनाचार्याणां प्रयत्नाधारशीलायां हि अद्याप्यस्मांक ज्ञानभण्डारं सुरक्षितमऽस्ति। वेदेषु विविध विद्यानां संकेत कृतमस्ति स्वामीदयानन्देन प्राचीन परम्पराद् पृथकैव विभिन्न वेदार्थं प्रक्रियां स्वीकृत्य वेदेषु विविध विद्यानां स्रोतमन्वेसितमस्ति, ऋषिभि वेदभाष्यं कुर्वन् लिखितवन्तः, केवलं वेद कर्मकाण्डैव न, अपितु वेदः सर्वसत्य विद्यानां पुस्तकोऽस्ति, तथ्योऽयंमुद्घाटितम्। अथर्ववेदीय साहित्यस्य सामान्यपरिचयप्रस्तुतकृतमस्ति अस्य एकमात्रं ब्राह्मण गोपथ ब्राह्मणोऽस्ति त्रयउपनिषदि प्रश्नोपनिषद् मुण्डक माण्डूक्यश्चऽस्ति। आयुर्वेदशास्त्रमथर्ववेदस्योपवेदो कथ्यते, अनेन शास्त्रेण आयोः ज्ञान भवति। आयुवेदस्रूोद्देश्यमस्ति स्वस्थमनुषस्य स्वास्थ्यरक्षणं वा रूग्णस्य रोग वारणं, आयुर्वेद जीवनांगोस्ति जन्मनात् मृत्युपर्यन्तं आयुर्वेदस्यावश्यकता भवति। चिकित्साशास्त्रस्याष्टांगेषु द्वेऽ़गे मुख्यौस्त, शल्य चिकित्सा, काय चिकित्सा। शेष षडांगनां सममेलनमयोद्वयोरंगयोरन्तर्गतः भवति शारीरिक तथा मानसिकादिव्याधीनांचिकित्सायुवेर्देनहि सम्भवोस्ति। अतरयं शास्त्रास्माकं जीवनस्यभिन्नांगोस्ति।

वेदेष्वायुर्वेदविषयकानेकामन्त्राः सन्ति येषु विविध रोगानां चिकित्सा वर्णितास्ति ऋग्वेदे चिकित्साविज्ञानेनसह सम्बन्धितानेकमन्त्रा प्राप्यन्ते, अस्मिन अश्विनिभ्याम् कृत शल्य चिकित्साऽतिप्रशंसनीयोस्ति अस्मिनायुर्वेदेनसहसम्बन्धित निम्न विषयं वर्ण्यते भिषकस्य गुण

कर्म:, भैषज्य:, शरीरांग:, दीर्घायुष्य:, नीरोगतां, तेजवर्चसं वशीकरण, वन्ध्याकरणं, रोगनाशक: विभिन्नमणय:, विविधौषधीनां नाम:, गुणकर्म: रोगनाम:, चिकित्सा वा, क्रिमिनाशक:, सूर्य चिकित्सा जलं, वायु:, विष:, शल्य चिकित्सानां विशद वर्णनं प्राप्यते।

द्वितीयोऽध्याये चिकित्साविषयासम्बन्धितदेवतानां परिचयंप्रस्तुतसन्ति। वेदानाम् प्रतिपाद्य विषयेषु वैदिक देवतानाम् स्थानं विशिष्टोस्ति। चतुर्षु वेदेषु न्यूनमंधिकरूपेण वा देवानां विषयं वर्णितम्।

वेदानां वर्ण्यविषयस्य विविधतां तथा विश्वस्य पदार्थेषुप्राणिषु वा प्राप्य दिव्यगुण कर्माणां कारणं देवतानाम् संख्याधिकोविद्यते।

वेदानामऽनुरूपं देवानां संख्या त्रयस्त्रिंशत् कथितोस्ति। एते त्रयस्त्रिंशत देवता: क्रमेण- स्वर्गे- एकादश:, अन्तरिक्षेऐकादश:, एकादशपृथिव्यां निवसन्ति। निरूक्तेपि देवतान् त्रिषु भागेषु विभक्तोस्ति। अग्नि पृथिवीस्थानीय: व इन्द्र: अन्तरिक्ष स्थानीय: एवं सूर्य:द्युस्थानीय: प्रमुख देवोऽस्ति। ऋग्वेदस्यैकमन्त्रे देवतानां संख्या - 3339 वर्णितोस्ति सहैवाथर्ववेदे- 480 देवतानां वर्णनमस्ति। शतपथब्राह्मणे तु 33, जडदेवतानामुल्लेखोस्ति अस्मिन् अष्टौवसव:, एकादश रूद्रा: द्वादशादित्य:, इन्द्रप्रजापतिश्च। एत्यग्नि: वरूणेन्द्राश्विनौ मरूतरूद्रादय: सन्ति। अस्मिन्ऽपि चिकित्सारोग्येनसहसम्बन्धित देवानां- रूद्र: अश्विनौ, इन्द्र:, वरूण:, सरस्वती:, अग्नि:, वायु:, सविता:, सोम:, मरूत:, सूर्यादिनाम् जलादीनां परिचय प्रस्तुतमस्ति एतेदेवता स्वौषधिचिकित्सा पद्धत्या मनुष्यानारोग्य दीर्घायुश्च प्रदाय्य तान् शं (कल्याणश्च) कुर्वन्ति। याचका एभिदेवताभि: सह स्वस्वास्थ्य दीर्घजीवनानाम् कृते प्रार्थयन्ति, एषुदेवतासु रूद्रं प्रथमो दैव्योभिषक कथितोस्ति अश्विनौ देव वैद्यौ कथितौ एतौ अश्विनौ औषधिचिकित्सया सह शल्य चिकित्साऽपि कुर्वन्ति स्म, एतौ चिकित्सा कौशले प्रवीण वैद्या: मन्यन्ते रूद्ररग्निरश्विनौ वरूणेन्द्रमरूत: सरस्वत्यादि देवतानां दिव्यभिषकस्योपाधिनालंकृता सन्ति।

तृतीयोऽध्याये स्वस्थवृत्त सद्वृत्तश्च चिकित्साः पद्धित्याः वर्णनम् कृतऽस्ति रूग्णस्य चिकित्सामहत्वपूर्णा भवति, किन्तु मनुष्यजीवनं दुःख दायकोऽयं रोगेव भवेत, एतस्मात् स्वस्थवृत्त, सदवृत्तस्यश्च पालनस्यादेशो ददात्यायुर्वेदः। स्वस्थवृत्तः चिकित्सा विज्ञानस्य सर्वोत्तमांगोस्ति। स्वास्थ्यस्वरक्षार्थं स्वस्थो पुरूष शयनादुत्थाय यानि कर्माणि कुर्वन्ति तानि स्वस्थवृत्तानि, कथितानि स्वस्थवृत्तस्य पालनेन मनुष्यः रोगान् वारयन् निरोगपूर्वकं सप्रयोजनं जीवनं यापयितुं शक्नोति। स्वस्थवृत्तं त्रिषुभागेषु विभक्तोस्ति- दिनचर्या, रात्रीचर्या, ऋतुचर्या।

स्वस्थपुरूषं प्रातः ब्रह्ममुहुर्तेउत्थातव्यम् यतः अस्मिन समये उत्थानेन मनुष्यस्वस्थोभवति अथर्ववेदेऽपि कथितोऽस्ति- उद्यन्त्सूर्य इव सुप्तानां द्विषतां वर्च आददे। (अथर्व- 7/13/2)

यथाद्वेषि जनस्य तेजोजौतेजस्वीपुरूषः हरति तथैव ब्रह्ममुहुर्तोंसुप्त पुरूषस्य तेजोऽऽयुर्बलमादिमुद्यन्त सूर्यं हरति।

ऊषाकालयुत्थितपुरूषः स्वसम्पूर्णयोः सुखेन यापयति। एतदन्तरं पुरूषं मुखंप्रक्षाल्य शौचादि कृत्वा दन्तःधावनं जिह्वा गण्डूषादि कार्येण मुख मलिनं शुद्धो भवति तथा दुर्गन्धाद्य वारयित्वा मनुष्यस्य मनः शुद्धो भवति। एतदनन्तरं शिरसितैललेपनमभ्यंग नासिकाः कर्णःनेत्रे तैलं स्थापनेन सिर पीड़ाकर्णपीड़ा चक्षुश्चस्वस्थो भवति, श्वेतकेश पतनादिंश्च अवरूद्धयति।

ऋग्वेदेकथ्यते यत् व्यायामेन शरीरंस्वस्थो पुष्टश्च कुर्यात, येन मनुष्यांग दुर्बलो न स्यात्। व्यायामं नियमेन कृत्वा मनुष्यं स्वशरीरं हृष्टपुष्ट, शीलावत्, कठोर शक्तिशालिश्च कृत्वा स्वास्थ्यं शतं कुर्यात्। नियमेन व्यायामं कृत्वा मनुष्य शतायुं प्राप्तु शक्नोति। स्नानं वस्त्रधारणं सुगन्धित तैललेपनम्, सूर्यरश्मीपानं छत्रपादुकादीनां धारणेन शरीरे स्फूर्तिमायाति मन प्रसन्नोजायते आलस्यं वारयति, तथा शरीरस्वस्थो भवति।

रोगान् वारयितु मनुष्यम् स्वस्थ ऋतवानुरूपसरलाहारं कर्तव्यम्, उच्च स्वस्थार्थं सशक्तशरीरविकासार्थमानिवार्य त्रीस्वुपस्तम्भेषु निद्रायाः द्वितीयस्थानमस्ति। समुचित निद्रया न

आगते शरीरेरोगात्पत्य: आयुर्क्षीणो भवति वा ते प्रायस: रूग्णा: भवति। अत: मनुष्यम् दृढीनिद्रा स्वीकर्तव्या दृढी निद्रार्थ यजुर्वेद प्रार्थनास्ति- अग्नेत्वं सुजागृहि वयं समुन्दिषीमहि(यजु04/14)

त्रीषु उपस्तम्भेषु ब्रह्मचर्य तृतीयमहत्वपूर्णस्तम्भोस्ति। ब्रह्मचर्येणैव स्वस्थ दीर्घजीवनं प्राप्यते यथा यजुर्वेदेकथितोस्ति आयुर्वर्धको कान्तिदायको शान्ति:, पुष्टि: दायको सर्वविध रोग नाशको तेजोजश्च प्रदाता, अयं ब्रह्मचर्य: (वीर्य) मम शरीरे अस्तु। तथा देव:, ब्रह्मचर्यतपोवलेन मृत्युम् वारयति।

ऋतुचर्यायां ऋतो: सन्धि काले अनेकविधा: रोगोत्पद्यन्ते, तेषु रोगेषु विजय: प्राप्तुं ऋतुरनुकुल शुद्धाहारं ग्रहितव्यम्। सदवृत्ते मनुष्य: सदाचारं पालयेत् अत: सत्यभाषणं, अन्ये न पीड़यान्, रागद्वेषस्यश्च कारणं नष्यतु। आचार्यातिथि सिद्धपुरूषाणां सम्मानंस्यात्। दान, यज्ञ तपं, क्रियात्, सत्यप्रिय, शान्ति प्रियश्चस्यात्, एषां सद्वृत्तानां पालनेन मानसिक स्वास्थ्यं सम्यक् भवति, मन स्वस्थ भूतेसति शरीरं स्वयं स्वस्थो भवति। अत: रोगात् दूरो भवितुं उपर्युक्त स्वस्थवृत्त, सदवृत्तयश्च चिकित्सया मनुष्य: स्वयं स्वस्थो भवति।

**चतुर्थपञ्चमोऽध्यायेषु** रोगाणाम उत्पत्ति अस्यकारणंञ्च विवेचनं एवमं वनस्पतिनाम वर्गीकरणं औषधिचिकित्साया वर्णनं कृतमऽस्ति्। आहार विहारे अनियमतामस्वस्थतां वा सर्वेषां रोगानाम् कारणोस्ति। तथा विकृत बुद्धिरप्यनेकरोगोत्पादयति, यावत् रोगा: सन्ति तेषां कृतेवेदे त्रिविध कारणागता:, **प्रथमं कारणं**- शरीरान्तर विषं यद् शनैर्शनैवर्धते एवं समयं प्राप्य शरीरे विकारोत्पादयति, **द्वितीयं कारणं** कृमि तथा जीवाणुं मन्यते, ते जीवाणव: ये अदृश्या:, शरीरे प्रविश्य नाना विध रोगानां कारणं जायते यद् (GERMS THEORY) जीवाणुवादं प्राचीन काले विदितासत् **तृतीयंकारणं** वेदे त्रिदोषा: मन्यन्ते त्रिविध धातूनां (वात: पित्त कफ:) विषमताया: रोगोत्पद्यन्ते। एतदतिरिक्त शोक: बाधितप्राणमपि रोगकारणोमन्यते।

शरीरोऽयं स्वस्थं वा निरोगं कर्तु, वैद्यै: ग्रामेषु, वनेषु, पर्वतेषु नदीसु समुद्र तटयुत्पन्ना

नानाविधौषधीनां सूक्ष्म परीक्षणं कृतमस्ति। तथैषांमौषधीनां वनस्पतीनांमुपयोगस्याधारे, अनेकेषु मार्गेषु वर्गीकरणं कृतमस्ति। अर्थववेदे वनस्पति वानस्पत्य औषधि वीरूद्धदाय: एवमं वनस्पतीनां गुणधर्मरूपादीनामाधारेऽपि वर्गीकरणं कृतमस्ति। वर्गीकरणोऽयं फलादिनामाधारे, पुष्पादिनामाधारे तथा फलपुष्पैर्विना, पत्राधारे कृतमस्ति। अन्यवर्गीकरणोपि वयं प्राप्नुम:, उपभोक्तानामाधारे निर्मातृणामाधारे स्वरूपाधारे, वर्णाधारे, वर्गीकरणं प्राप्यते वर्गीकरणोऽयं वैद्यै: रोगानमाधारे कृतवन्त।

एषामोषधीनामुत्पत्ति मानव: सृष्टे: पूर्वमभवत् औषधयरेते देवेभ्यरपि युगत्रीऽयं पूर्वोत्पन्ना। ओषधयरेते संसारे सहस्रसु स्थानेष्वुत्पन्नो जायन्ते। तथा केवलं मानवानाम् दुखान् वारयन्ति रक्षयन्ति संरक्षयन्ति च। अतरेवे सा ओषधय: मातृवत् सन्ति मिथ्याहारविहाराधारणीय वेगान् धारणं नानाविध मल क्रिमय विषादयश्च शरीरान्तरात् रूग्णोकुर्वन्ति, तथा शरीरं विनाशकसाधानो भवन्ति। एतस्मात् स्वशरीरम स्वस्थो दृष्ट्वा मनुष्य रोगवारणमिच्छति। तदा शरीरमंय स्वस्थो वा निरोगं कर्तुं बहुविध चिकित्सा अन्विष्टमस्ति।

अथर्ववेदे चतुर्विध चिकित्सा विधिनां वर्णनं प्राप्यते- आर्थवणी चिकित्सा, आंगिरसी, देवी, मनुष्यजा चिकित्साआदि। आथर्वणी चिकित्साया सम्बन्ध अथर्वा ऋषीणा सहोस्ति, अस्मिन् मानसिक सान्त्वना प्रदाय्य रूग्णस्य चिकित्सा क्रियते। आंगिरसी अस्या प्रणाल्यां अंगनिन्द्रियान् वा रसै: चिकित्सा क्रियते। देवी चिकित्सा अस्यां जलं सूर्यारग्नि देवै: चिकित्सा क्रियते। मनुष्यजा, अस्यां मानवै: निर्मितं, भस्म:, कषायचूर्ण:, अवलेह कल्पादिभि: या चिकित्सा क्रियते मनुष्यजा चिकित्सा कथ्यते। एषां चिकित्सा शारीरिक मानसिक सर्वविध रोगान् वारयति। मनुष्यान् सुखी करोति। अर्तरौषधीन् वयं प्राकृतिकोद्भिजोदभिद्श्च, खनिज द्रव्यं, प्राणिज द्रव्यं, समुद्रज द्रव्यरूपे प्राप्तुं शक्नुम:। एते ओषधय: जीवन रक्षका: सन्ति। एवं चिकित्साया: प्रमुख साधनोस्ति एभिर्विविध रोगान् वारयित्वा मनुष्य: स्वस्थ स्वास्थ्यं प्राप्नोति। पृश्निपर्णी: वरूण: पाटा: लाक्षा, उदुम्बर:, गुगुल, रोहणी:, नितन्नी:, शंख:, आंजन: वचादि औषधिनां वर्णनकृतमस्ति।

**षष्टोऽध्याये**प्राकृतिक तत्वमाध्यमेन सूर्य जल वायु अग्नि मृत्तिकेन चिकित्सा कृतमस्ति। पञ्चभौतिकोयं शरीरं परितः प्रसारितमानो यं ब्रह्माण्ड प्रभावित करोति एवं तेन स्वयमपि प्रकाशितो भवति। एते सूर्यः, पृथिवी, जलवायुरग्नि मनुष्यः शरीरं पोष्यन्ति। यद्यैते दूषिता भवन्ति तदानेकविध व्याधीनां कारणश्च जायन्ते यः पुरूषे रोगोत्पाद्य मृत्योः समीपं नयन्ति। अतः मनुष्यैषां प्राकृतिक तत्त्वानां माध्यमेन निशुल्क चिकित्सां प्राप्य स्वस्थो भवितुं शक्नोति। अस्या प्राकृतिक चिकित्साया वेदेषु विशद विवरणं प्राप्यते। सूर्यः चिकित्सा मनुष्य रक्ताल्पता हृदयरोगः कर्णपीड़ा, सिरपीड़ा सर्वविध ज्वरः अन्धत्व उदरपीडा यक्ष्मा कक्षुपीडा गण्डमालादि रोगान् वारयितुं शकनोति। सूर्यस्यप्रकाशे अमृतवत् वसति इति- (सूर्यस्य भागे अमृतस्य लोके)। सूर्यरश्मयः रोग क्रिमीन् वासोऽस्ति। दृष्टादृष्टान् नश्यति- (उत पुरस्तात् सूर्य एति, विश्व दृष्टो अदृष्टाहा)। जलविषये कथितोसित शुद्धजलेऽमृतरूपौषधेः नासोस्ति अतः शुद्धं जलं प्रयुक्तव्यम्- (अपस्वन्तरमृतम आपसुभेषजम्)। शुद्धजले स्नानः पानेन मलं वारयित्वा शरीरं शुद्धयति। अग्नि तत्वं शीतौषधमुच्यते। अग्निः ज्वालामनुष्म् निरोगी कृत्वा कल्याणश्च करोति।

अग्नि रोगोत्पादक कृमीन् नाशकोऽस्ति अग्नौ गुग्गुल ज्वालनेन सुगन्धोऽयं रोगं वा रोग कीटाणून् नश्यति। वायोः भेषजमृतादि कथितोस्ति शुद्धवायोः सेवनं गृहे शुद्ध वायोः प्रवेशं शुद्धवायोः स्वसनं प्रदूषणरहितस्थाने निवासं पर्वतेषुवासः, समुद्र तटे निवासं कुर्वन् अति शुद्ध वायोः सेवनं मनुष्याय दीर्घायुष्य साधनोस्ति। अथवा उपरोक्त कथनाम् पालयति सर्व सर्वदा रोगेभ्य मुञ्चति।

प्राकृतिक तत्त्वेषु मृत्तिकायारपि चिकित्सायाः दृष्टेः महत्वोऽस्ति (वाल्मीक्याः) बमि मृत्तिका रक्तास्रावस्यौषधीरस्ति, अस्य लेपो क्रियते। एवं व्रणं विष प्रभावमपि वारयति। अतरनेन प्रकारेण वयं प्राकृतिक तत्वानाम् माध्यमेनानेक रोगान् वारियतुं शक्यते। एवं स्वस्थो भूत्वा सम्पूर्णायुं भोक्तुं शक्यते। अतः मनुष्यं यज्ञ यागादिभिः एतान् पञ्चदेवान् तृप्तं स्थापनीयम्।

**सप्तमोध्याये** मानसिकरोगाणां स्त्रीरोगाणांचिकित्सायाः **वर्णनकृतमस्ति मनुष्याणां मनः** सुख दुःखस्य कारणंमस्ति। मनसः शुद्धि भवति रोगोत्पन्ना न भवन्ति, अशुद्धिमनेकविधरोगोत्पद्यन्ते, अनन्तः मनसः शक्तयः। मनरसाध्यमपि साध्यं करोति। मन मानव हृदयस्याखण्ड ज्योतिरस्ति। मनैव रोगशोकादीनामुत्त्पादयति तथा मनैव तान् वारयत्यपि। मनोबलस्य हासैव रोगशोकादीनांकारणमस्ति तस्योत्थानमेतान् दोषान् नश्यति। अतः मानस रूग्णस्य मनोबलं विकासेन मानस रोगान् वारयितुं शक्यते आश्वासनचिकित्सया रूग्णस्य मनोबलं वर्धते एवं तस्यरोगानिवारणे सफलोभवति।

''हे रूग्ण! त्वं भयभीतं न स्यात् त्वं न मरिष्यति। अहं तुभ्यं जीवनं दत्वा शतंवर्षायुः ददामि। त्वमौषधं स्वीकुरू अहं त्वां दीर्घायुः करोमि''।

मानसचिकित्सायां मनसः पवित्रतायां स्वीकृयते चरित्रोत्तमयावत् तावत्, हि शीघ्र रोगोगच्छति।

अतः मनुष्यं स्वक्रोधः, ईर्ष्या भयादि भावेष्वपि संयमितव्यम्। अथर्ववेदे मानसरोग चिकित्सायाः विस्तारेण वर्णनं प्राप्यते। स्त्रीषु अनेकविध रोगोत्पन्ना जायन्ते यथा योनि कृमि गर्भनाशकश्च कृमिः गर्भपातावरोधनम् वन्ध्यात्वरोगः ऋतुस्रावावरोधनम् सुख प्रसूतिः मूढगर्भः सौन्दर्य वृद्धिश्चादीनाम् ऐतेषाम रोगाणाम् चिकित्सायाः वर्णन कृतास्ति।

**अष्टमनवमोध्याये** शल्यचिकित्सा कृत्रिमअंगाणां संयोजन, व्रणस्य चिकित्सा आदिनाम वर्णनकृतमस्ति एवं विषस्य चिकित्सायाः वर्णनकृतमस्ति। वैदिकसाहित्ये उत्कृष्ट शल्य कर्मणः वर्णनंमिलति। ऋग्वेदाथर्ववेदे शल्य चिकित्साया सह सम्बन्धित पर्याप्त मन्त्रा संकलिता अस्ति। वेदेष्वाधुनिक कृत्रिमांग संयोगणस्य वर्णनमपि प्राप्यते। ऋग्वेदे नृप खेलस्य सम्बन्धी स्त्रीयः पाद युद्धे छिन्नमासीत्। तदाश्विनौः तस्या स्त्रीयाः छिन्नपादस्थाने कृत्रिम लौह पाद संयोजितौ येन सा पुनः गमनागमनं प्रारब्धवती। दधीची ऋषेः सिरंकर्तयित्वाश्वस्य सिरं योजितौ, पून तं निष्कास्य दधीच्याः ऋषेसिरैव योजितौ, च्यवन ऋषिणं युवा कृतम्, छिन्न भिन्न रेभ ऋषे शरीरं

संयोजन, त्रिषुस्थानेषु कर्तितश्यावांग योजनम्, अन्धौ ऋज्राश्वकण्वौ नेत्र ज्योति प्रदानम्, एतानि शल्यचिकित्साया महत्वपूर्णा प्रमाणास्ति, यदाश्विनिभ्याम कुरूताम्। अश्विनिकुमारौ वैदिक कालस्य सर्वश्रेष्ठ शल्य चिकित्सकोस्त:।

व्रण नवजात शिशौ नाभि पतनादेवोत्पन्नो जायते अस्याचिकित्साया: कृते शल्य चिकित्सायावाश्यकता भवति, अतरेतद् मन्यते शल्यचिकित्सायारावश्यकता केवलंमानवानां कृते सर्वप्रथम अभवत्।

ते तस्मिन वैदिकयुगे मानव शरीररान् छिदन्ते स्म:। फलत: तेषां शरीर ज्ञानमुच्चमासीत्। ते लिंग नाश मूत्रदोषनिवारणस्य शस्त्रकर्मणि कुशलासन्। ते गर्भाशयात् मृतोवा जीवीतशिशून् निष्कासनेपि कुशलासन्।

अथर्ववेदे विषचिकित्साया: विस्तारेण वर्णनं प्राप्यते, विषय प्रभावं वारयितुम् औषधिचिकित्सा तथाश्वासनचिकित्साया: विधानमपि कृतमस्ति। सर्प दंशाम् स्यात् चतुरंगुलोपरि बन्धनविधान मपि वर्णितम्।

अनेन वयं स्वस्थ स्वास्थ्य चिकित्सां स्वज्ञानकर्मणामाधारे चिकित्सा ज्ञानं वर्धयितुं शक्नुम:, वैदिक:कालस्य चिकित्सा पद्धति वैज्ञानिकोस्ति तत्र विज्ञानाकाक्षां निहितास्ति, एवं वैज्ञानिक चिकित्सा प्रणाल्येतिहासे एतस्य महत्वपूर्ण स्थानमस्ति। आधुनिक चिकित्सा पद्धति: ऋणिरत्येतस्य। अत: वेदे केवलं कर्मकाण्डैव न अपितु रोगानामुत्पत्ति कारणं रोगानां नामानि चिकित्सा, ओषधीज्ञानं, विषं, प्राकृतिक, शल्यं चिकित्सादीनामपि वर्णनं प्राप्यते यदाधुनिक पद्धत्या सह मिलति।